प्रज्ञायन्ते इति प्रज्ञास्तासां प्राणिमात्राणामन्तः शरीरमध्ये ग्रास्ते इतरेन्द्रियाणि ब-हिःस्थानि मनस्त्वन्तरिन्द्रियमित्यर्थः । तत् तादृशं मे मनः शिवसंकल्पमस्त्विति व्याख्यातम् ॥२॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्नऽऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥३॥

यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् करणाधिकरणयोश्चेति [पा॰ ३.३ ११७] करणे ल्युट्प्रत्ययः । उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः चिती संज्ञाने अस्मात् एयन्तादसुन्प्रत्ययः सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनो धृतिर्धैर्यरूपम् मनस्येव धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् उक्तमपि पुनरुच्यते आदरार्थम् अभ्यासे भूयांसमर्थं मन्यन्तऽइति [निरु॰ १०.४२.] यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनो विना किं चन किमपि कर्म न क्रियते जनैः सर्वकर्मसु प्राणिनां मनः पूर्वं प्रवृत्तेर्मनःस्वास्थ्यं विना कर्माभावादित्यर्थः । अन्यारादितरर्ते इत्यादिना [पा॰ २.३.२९.] यस्मादिति ऋते-योगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥३॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥४॥

येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम् । इदं किम् भूतम् भूतकालसम्बन्धि वस्तु । भुवनं भवतीति भुवनम् भवतेः क्युप्रत्ययः वर्तमानकालसम्बन्धि । भविष्यत् भविष्यतीति भविष्यत् लृटः सद्वेति [पा॰ ३.३.१४] शतृप्रत्ययः तौ सदित्युक्तेः [पा॰ ३.२.१२७] । त्रिकालसम्बद्धवस्तुषु मनः प्रवर्ततऽइत्यर्थः श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन । अमृतेन शाश्वतेन मुक्तिपर्यन्तम् श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते तनोतेर्यकीति [पा॰ ६.४.४४] आकारः । कीदृशो

यत्र सप्तहोता सप्त होतारो देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता अग्निष्टोमे सप्त होतारो भवन्ति । तन्मे मनः इति व्याख्यातम् ॥४॥

यस्मिन्नृचः साम यजूᳬषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिँश्चित्तᳬ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥५॥

यस्मिन्मनसि ऋचः प्रतिष्ठिताः यस्मिन् साम सामानि प्रतिष्ठितानि यस्मिन्यजूंषि प्रतिष्ठितानि । मनसः स्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् अन्नमयं हि सोम्य मन इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता । तत्र दृष्टान्तः रथनाभौ अराः इव यथा अराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वदृग्यजूंषि मनसि । किं च प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयं ज्ञानं यस्मिन्मनसि ओतं प्रोतं निक्षिप्तम् तन्तुसन्ततौ पटे इव सर्वं ज्ञानं मनसि निहितम् मनःस्वास्थ्ये एव ज्ञानोत्पत्तिर्मनोवैयग्र्ये ज्ञानाभावः । तन्मे मनः शिवसंकल्पं शान्तव्यापारमस्तु ॥५॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥६॥

यत् मनो मनुष्यान्नेनीयते अत्यर्थमितस्ततो नयति नयतेः क्रियासमभिहारे यङ् मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते मनुष्यग्रहणं प्राणिमात्रोपलक्षकम् । तत्र दृष्टान्तः सुषारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान्नेनीयते । द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयते इत्यनुषङ्गः रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् प्रथमया नयनं द्वितीयया नियमनम् तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः । यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते । यच्च मनः अजिरं जरारहितम् बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात् । यच्च जविष्ठम् अतिशयेन जववत् न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्तीति श्रुतेः । तन्मे इत्युक्तम् ॥६॥

पि॒तुं नु स्तो॑षं म॒हो ध॒र्माणं॒ तवि॑षीम् ।
यस्य॑ त्रि॒तो व्योज॑सा वृ॒त्रं विप॑र्वम॒र्दय॑त् ॥७॥

उष्णिक् अन्नस्तुतिः । तं पितुमन्नं स्तोषं स्तौमि किम्भूतम् महो महसः तविषीं तविष्या. बलस्य धर्माणं धारयितारम् तविषीति [निघ॰ २ ९] बलनाम विभक्तिव्यत्ययः अन्नेनैव बलोत्पत्तेः । तं कम् यस्य पितोरोजसा बलेन त्रित' त्रिस्थान इन्द्रः वृत्रं दैत्यं विपर्वं विगतसम्बन्धनं कृत्वा वि अर्दयत् विविधमर्दितवान् इन्द्रेण वृत्रोऽन्नबलेनैव हत इत्यर्थः ॥ स्तोषं स्तौतेमिपि इतश्च लोपः परस्मैपदेष्विति [पा॰ ३ ४ ९७] इकारलोपे लेटोऽडाटाविति [पा॰ ३ ४ ९४] अडागमे सिब्बहुलं लेटीति [पा॰ ३ १ ३४] सिप्प्रत्यये गुणे च रूपम् । महः महच्छब्दस्य ङसि छान्दसष्टिलोप. । धर्माणम् धरतेर्मन् । विपर्वम् विगतानि पर्वाणि यस्य तम् उप्रत्यये टिलोपः । अर्दयत् बहुलं छन्दस्यमाङ्योगेऽपीति [पा॰ ६ ४ ७५] अडभावः । व्यवहिताश्चेति [पा॰ १ ४ ८२] वेरुपसर्गस्य व्यवधानम् ॥७॥

अन्वि॒दनु॑मते॒ त्वं मन्या॑सै॒ शं च॑ नस्कृधि ।
क्रत्वे॒ दक्षा॑य नो हिनु॒ प्र ण॒ आयूं॑षि तारिषः ॥८॥

चतस्रोऽनुष्टुभः द्वयोरनुमतिर्देवता । इत् निपातोऽनर्थकः हे अनुमते त्वमनुमन्यासि अनुमन्यस्वास्मदुक्तं बुध्यस्व नोऽस्माकं शं च शमेव सुखमेव कृधि कुरु । च पुन. नोऽस्माकं क्रत्वे क्रतवे संकल्पाय दक्षाय तत्समृद्ध्यै संकल्पसिद्ध्यै च नोऽस्मान्हिनु गमय नोऽस्माकमायूंषि प्रतारिषः प्रतारय वर्धय । लेटोऽडाटाविति [पा॰ ३ ४ ९४] आट् वैतोऽन्यत्रेति [पा॰ ३ ४ ९६] ऐकारः । कृधि श्रुशृणुपृकृवृभ्यश्छन्दसी ति [पा॰ ६ ४ १०२] हेर्धिः बहुलं छन्दसीति [पा॰ २ ४ ७३] शपो लुक् । क्रत्वे गुणाभावे यणादेशः । तारिषः सिब्बहुलं छन्दसि णिद्वत्स्य इति [पा॰ ३ २ ३४ वा॰ ३] वृद्धिः अन्यत्पूर्ववत् प्रपूर्वस्तरतिर्वृद्ध्यर्थ. ॥८॥

अनु॑ नो॒ऽद्यानु॑मतिर्य॒ज्ञं दे॒वेषु॑ मन्यताम् ।
अ॒ग्निश्च॑ हव्य॒वाह॑नो॒ भव॑तं दा॒शुषे॒ मयः॑ ॥९॥

अनुमति अद्य नोऽस्माकं यज्ञं देवेषु यज्ञियेषु अनुमन्यताम् अग्निश्च यज्ञं देवेषु अनुमन्यताम् किम्भूतोऽग्निः हव्यवाहनः हविषो वोढा । किं च दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपौ अनुमत्यग्नी भवतं भवतामिति पुरुषव्यत्ययः । हव्यं वहतीति हव्यवाहनः हव्येऽनन्तःपादमिति [पा॰ ३ २ ६६] वहेर्ण्युट् । दाशुषे दाश्वान्साह्वानिति [पा॰ ६ १ १२] साधु ॥ ९ ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १० ॥

सिनीवाली देवता । हे सिनीवालि हे पृथुष्टुके स्तुकः केशभारः स्तुतिः कामो वा हे पृथुकेशभारे महास्तुते वा पृथुकामे या या त्वं देवानां स्वसा असि भगिनी भवसि सा त्वमाहुतं हव्यं जुषस्व प्रीत्या गृहाण हे देवि नोऽस्मभ्यं प्रजां च दिदिड्ढि (?) दिश देहि बहुलं छन्दसीति [पा॰ २ ४ ७६] दिशतेः शपः श्लुः ततो द्विर्वादि ॥ १० ॥

॥ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

सरस्वतीनदीदेवत्या । या दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपियन्ति गच्छन्ति किम्भूताः सस्रोतसः समानं स्रोतः प्रवाहो यासां ताः । तुरवधारणे सा उ (?) सैव सरस्वतीव पञ्चधा देशे सरिन्नदी अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्येवाभवत् ॥ ११ ॥

त्वमग्ने प्रथमोऽअङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
*तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १२ ॥*

जगत्याङ्गिरस ह गत्यर्थौ अग्ने रिरिद्रुवनुष्टुभौ । हे अग्ने त्वं देवानां प्रथमः सखा अभवः भूतोऽसि आद्यो मित्रभूतो देवानां वर्त्तसेत्यर्थः । किम्भूतस्त्वम् अङ्गिराः अङ्गानां रसः यद्वा अङ्गिभ्य आत्मभ्यो यामानिभ्यो हाति सुरमित्यङ्गिराः । ऋषिर्द्रष्टा । देवः द्योतमानः । शिवः कल्याणः । किं च तव व्रते कर्मणि धर्त-